


संस्कृत रु.१५

# महावीरः हनुमान्

IBH

# महावीरः हनुमान्

पवनदेव: अंजनीदेवी चेति एतयो: सुपुत्र: महावीर: हनुमान्। अनेन वा नर-जन्म गृहीतं तथापि स्वचारित्र्यबलेन अनेन सर्वदेवतासु प्रमुखं स्थानं समुपलब्धम्। श्रीरामविषये अस्य एकनिष्ठा अनन्या भक्ति:। अनया भक्त्या च अयं महावीर: हनुमान् श्रीरामस्य सर्वश्रेष्ठ:अनन्य: परम: च भक्त: इति प्रसिद्धिं गत:। अनया भक्त्या अयं विचारै: संकुचित: संकीर्ण: वा नैव कृत: न च अयम् अहंकारी जात:। पुनश्च अयं करुणा- प्रेममय- भावभावनाभि: परिपूर्ण: प्रबल: च जात: आसीत्। अत: एव यदा सीता एकाकिनी रावणस्य अशोकवने श्रीरामविरहाग्नौ ज्वलति स्म तदा हनुमान् तस्यै सान्त्वनादानाय सिद्ध: समर्थ: च अभवत्।

हनुमान् स्वभावेन धीर: गभीर: च आसीत्। स्वस्य सापत्नबन्धु: भीमसेन: कल्याण- सौगन्धिकानाम -पुष्पान्वेषणे निमग्न: जात: आसीत् तदा तेन भीमसेनेन एतस्य हनुमत: उपहास: अपि कृत: आसीत् इति अयं महाभारतस्य प्रसंग: अतीवरोचक: लोकप्रिय: चापि वर्तते।

हनुमान् वानर: वा नर: वा इति अयं महत्त्वपूर्ण: विषय: नास्ति। अत्र महोदात्त-**भाव-भावनानामेव** ज्ञानम् एव महत्त्वपूर्णं वर्तते। एतदेव जनै: अवगन्तव्यम् इति कथनम्। अत: एव हनुमत: विषये स्तवनीया: केचित् श्लोका: अत्र दीयन्ते।

अशेषलंकापतिसैन्यहन्ता श्रीरामसेवाचरणैककर्ता
अनेक दु:खाहत लोकगोप्ता त्वसौ हनुमांस्तव सौख्यकर्ता ॥ १ ॥

कृतक्रोधे यस्मिन्नमरनगरी मंगलरवा,
नवातंका लंका समजनि वनं वृष्यति क्षति।
सदा सीताकान्तप्रणतिभतिविख्यातमहिमा,
हनूमानव्याद्व: कपिकुलशिरोमण्डनमणि: ॥ २ ॥

मनोजवं मारुततुल्य वेगं जितेन्द्रियं बुद्धिमतां वरिष्ठम्
वातात्मजं वानरयूथमुख्यं श्रीरामदूतं शरणं प्रपद्ये ॥ ३ ॥

संस्कृतानुवादक: पं. गुलाम दस्तगीर: अब्बासअलि: बिराजदार:
विश्व- संस्कृत- प्रतिष्ठानस्य प्रेरणा, भारतपुस्तक भवनस्य प्रकाशनम्।

*Illustrator : Ram Waeerkar*

**Presented By:** P.t. Gulam Dastagir Birajdar

**Editor : Anant Pai**



Published by Anant Pai for India Book House Limited, Fleet Building, Mathuradas Vasanji Road, Marol Naka, Andheri (E), Mumbai - 400 059 and printed by him at Prasad Offset Press, Shed B&CS, No. 42, Hissa No. 2, Sativali, Vasai Kaman Road, Vasai Taluka, Thane District.


महावीरः
हनुमान्
हनुमान् पवन-
देवस्य पुत्रः।
एकदिने उदीयमान-
सूर्यः फलम् इति
मत्वा तम् सः
अभ्यक्रमत्।

वयसा वर्धमानः अयं बलेन अपि प्रबलः जातः। एकदा अनेन मत्त-गजेन निहन्यमानः राजकुमारः सुग्रीवः रक्षितः।

हनुमन्, भवान् मां मरणात् रक्षितवान्!

इदं मम सौभाग्यमेव राजकुमार!

किष्किन्धानरेश वालिना सुग्रीवः स्वदेशात् निष्कासितः। तदा हनुमान् अपि तेन सह पंपा-समीपस्थे वने निवसति स्म। तत्र तयोः महाकठिनाः दिवसाः व्यतीताः भवन्ति स्म।



एकदिने -

द्वौ पुरुषौ एतौ प्रति आगच्छतः स्म।

एतौ वालिना प्रेषितौ स्याताम्। भवता ज्ञातव्यौ कौ एतौ इति।


ततः हनुमान् अगतिक मानवरूपं धृत्वा तयोः समीपं गतवान् ।
भवन्तौ साधुपुरुषौ कुत्र गच्छतः ?
आवां वानरराज-सुग्रीवं प्रति गच्छावः ।


अयं मम ज्येष्ठबन्धुः रामः। अस्मै अयोध्या-युवराजाय वनवासः दत्तः अस्ति । अस्य पत्नी सीता रावणेन अपहृता । तस्याः अन्वेषणे आवां सुग्रीवस्य सहायम् इच्छावः ।
लक्ष्मणस्य एतां वार्तां श्रुत्वा हनुमतः हृदयं प्रेमभक्तियुक्तं भावभावनामयं जातम् ।


तेन कृत्रिमः स्ववेषः निष्कासितः स्वस्य च मूलरूपेण श्रीरामचरणयोः सः पतितः ।
क्षन्तव्यः अहं वास्तविकतया सुग्रीवस्य मन्त्री अस्मि ।
अपि आवां सुग्रीवसमीपे त्वं नयेः ?


वास्तविकं स्वरूपं धृत्वा हर्षोत्फुल्लं च भूत्वा हनुमान् रामलक्ष्मणौ स्वस्कन्धे धारयित्वा प्रस्थितवान् ।


महानन्ददायकम् इदं मेलनम्। नवीनमित्रेषु एतौ द्वौ बन्धू।
अपि वालिवधार्थं भवतोः सहाय्ये भवेत्?
किमर्थं वालिवधः भवता अपेक्ष्यते?


एकदा राक्षसेन सह युद्धार्थं वालिना सह गतः आसम्। वाली मां महागुहाद्वारे संस्थाप्य अन्तर्भागे प्रविष्टः। बहुकालपर्यन्तं मया प्रतीक्षा कृता। तथापि सः न प्रत्यागतः। मया मतं यत् सः हतः स्यात्। अहं ततः प्रत्यागतः।


राजसिंहासनं रिक्तं भवितुं नार्हति। अतः जनैः मम राजतिलकः कृतः। ततः एकदिने वाली प्रत्यागतः। ततः च...


...अयं मां निष्कासितवान्।


तदाप्रभृति स्वजीवरक्षार्थं संभ्रमन् अस्मि। अपि भवतः सहायं तस्य यथार्थं भवेत्?
हं, करिष्ये।


सुग्रीवेण कंकणम् आनीय रामाय दर्शितम्।
अस्माभिः रावणरथे महिला दृष्टा। तया इदं कंकणम् अस्मान् प्रति प्रक्षिप्तम्।
सीतायाः एव एतानि सन्ति।


सुग्रीवेण द्वन्द्वयुद्धार्थं वाली समाहूतः। श्रीरामः वालिवधार्थं सिद्धः। द्वयोः मुखादिरूपं समानमेव। अतः कः वाली इति ज्ञातुं रामः असमर्थः।


अग्रिमयुद्धे रामेण सुग्रीवाय एका माला दत्ता परिधानार्थम्। अनेन वाली रामबाणस्य लक्ष्यम् अभवत्। किमपि काठिन्यं नागतम्।


सुग्रीवः किष्किन्धाधिपतिः जातः। वालिपुत्रः अंगदः युवराजः अभवत्।
महाराज-सुग्रीवस्य जयः।
युवराजः अंगदः चिरायुः भवतु।


सुग्रीवेण स्ववानरवीराः सीतान्वेषणे चतुर्दिक्षु प्रेषिताः।
स्थाने स्थाने अन्वेषणीया।
अस्माभिः अवश्यम् अन्विष्यते।


वानराः भिन्न-विभिन्नदिक्षु निर्गताः।


हनुमान् अंगदः जांबवान् च दक्षिणदिशां प्रति प्रचलन्तः समुद्रतीरं प्राप्ताः।


समीपस्थे पर्वते एतैः गरुडराजदर्शनं प्राप्तम्।
समुद्रान्यतीरे रावणराजधानी लंका। तत्रैव सीता बन्दी।


समुद्रान्यतीरं शतयोजनदूरम्! समुद्रोल्लंघनं कथं साध्यम्?


अहं विंशतियोजनं कूर्दे।
अहं त्रिंशद्योजनम्!
जांबवान् त्वम्?


त्वं कति दूरं कूर्दसि?
अहं तु स्थविरः, तथापि नवतियोजनं कूर्दे।


अस्मिन् संलापे हनुमान् मौनेन स्थितः। सर्वे तं प्रति अपश्यन्।
हनुमन्, त्वमेकः एव परपारं गत्वा प्रत्यागच्छसि अपि। गच्छसि?
अवश्यम्!


महाकायपक्षिवदेव स्वमार्गेण तेन उड्डानं कृतम्।


एकः विशालः पर्वतः समुद्रात् उद्भूतः।
तेन हनुमतः मार्गः निरुद्धः।
संघट्टनमपि।


अहं मैनाकः। एकदा तव जनकेन मम प्राणाः रक्षिताः। क्षणं विश्रामं कृत्वा अग्रे गच्छ।
धन्यवादाः अहं न तिष्ठामि।


हनुमान् उड्डयते। मुखोद्घाटिता मकरी समुद्रात् उद्भूता।


मम मुख प्रविश।


हनुमान् स्वशरीरं बृहत् पुनरपि बृहद्करोत्।


तथा मकरी अपि स्वमुखम् अतिविस्तृतवती।







अन्ते हनुमान् लंकां प्राप्तः।


नगरप्रवेशे अपि महती समस्या। सर्वतः रक्षकाः दृश्यन्ते। एतावान् लघुः भवेयं यत् कः अपि मां न पश्येत्।


हनुमान् नगरे अभ्रमत्...
वीथ्यांवीथ्यां गृहे गृहे च।


तेन दृष्टाः बलशालिनः योद्धारः गजाः।


घातुकानि शस्त्रास्त्राणि।


नगररक्षकाः भीमकाय-सैनिकाः च।


मनोमोहिनी लंकानगरी देदीप्यमाना च हनुमान् काश्चित् उदासः अभवत्।
यदा मम स्वामी रावणम् आक्रमति तदा एषा सुन्दरता नष्टा भविष्यति।


नगरे परिभ्रमणं कृत्वा हनुमान् रावणस्य प्रासादे प्राविशत्।


रात्रिसमयः । सर्वे सुप्ताः आसन् ।


प्रासादे सुन्दराः राज्ञ्यः ।


रावणपुत्रः शूरः वीरः इन्द्रजिदपि ।


रावणबन्धुः कुंभकर्णः च वर्षस्य षण्मासेषु निद्रामग्नः भवति स्म ।


स्वयं दशाननः रावणः अपि ।


हनुमता दृष्टा रावणकक्षे एका सुन्दरी सुप्ता।
अपि एषा सीतादेवी? कदापि नहि। सा कदापि अस्मै नर-पिशाचाय स्वां न समर्प-यिष्यति।


सीतां प्रासादे अदृष्ट्वा सः समीपस्थम् अशोकवनं गतः।


एकवृक्षाधः रामध्यान-मग्ना सीता उपविष्टा आसीत्।
अस्याः समीपे गमनम् असंभवम्। राक्ष-सीभिः परिवृता एषा।


हनुमान् वृक्षे निलीनः। प्रातः रावणः तत्रागतः।
वद अधुनापि मम पत्नीपद-मिच्छसि न वा?
एतत् कथमपि पापम्।


मम स्वामिधनुषः टंकारः श्रूयते मया। तव कालः आगतः अस्ति।
हं हं! रामः मम किं विघट्ट-यति?


रावणः निर्गतः। राक्षसीभिः सीता त्रस्ता अभवत्।
रावणेन सह विवाहः कार्यः। तथा पतिः नहि प्राप्यते।
कति दिनपर्यन्तं कष्टानि अहं सहिष्ये?


कतिपयसमयानन्तरं सीता एकाकिनी जाता तदा हनुमता रामेण दत्तम् अंगुलीयकं तस्याः अंचले पातितम्।
किमेतत्? मम नाथांगुलीयकम्।


बद्धांजलिः हनुमान् वृक्षादवतीर्य सीतायाः पुरतः स्थितः, सर्वा वार्ता च तेन श्राविता।
मम स्वामी त्वां मुक्तां कर्तुं शीघ्रमेव आयाति।


अहं त्वां मम पृष्ठे गृहीत्वा नेतुं शक्नोमि। चलतु भवती।
नहि स्वप्रतिष्ठार्थम् अत्रागत्य रावणेन सह योद्धव्यं तेन। गृहाण इदमाभूषणं, अनेन सः जानाति सर्वम्।


हनुमता रावणं निकर्तुं निश्चयः कृतः।
किं कथम् अस्ति?
इदं भवतां कृते।


वृक्षान् उत्पाट्य राक्षसान् प्रहृत्य हनुमता हाहाकारः कारितः।
रक्षन्तु!
यमावतारः अस्ति।
प्राणाः प्रियाः तदा धावत।


हनुमता प्रहताः राक्षसाः रावणसमीपं गताः।
महाराज, कः अपि यमदूतः वाटिकाम् उध्वस्तां करोति।


रावणेन हनुमन्तं निगृहीतुं सैनिकाः प्रेषिताः।


परन्तु तस्य समीपं गन्तुं न समर्थः कः अपि।


हनुमान् अधुना वास्तविकाकारे आगतः आसीत्। तथापि इन्द्रजिता सः न पराभूतः। तदा इन्द्रजिता प्रबलः नागपाशः तं प्रति प्रक्षिप्तः। नागपाशेन हनुमान् निबद्धः जातः।




राक्षसैः सः दृढतया बद्धः।
अहं बद्धः एव तिष्ठामि। तदा एव राजसभायां प्रवेशः शक्यः।


हनुमान् देदीप्यमान-राज-सभायां सभासीनः जातः।


वधकः आहेयः !


रावणस्य धर्मात्मा बन्धुः रावणं निरुद्धवान् ।
दूतहत्या भवितुं नार्हति ।


ततः राक्षसैः हनुमतः पुच्छं वस्त्रैः वेष्टितं तैलेन च क्लिन्नं कृतम् । पुच्छं पुनरपि दीर्घमभवत्


...पुनरपि दीर्घम् ।
वस्त्राणि आनेयानि ।
तैलमपि ।


पुच्छं वर्धमानं जातम् ।
तैलं समाप्तम् ।
महाराजाय निवेदनीयम् ।


हनुमतः पुच्छं वर्धमानमेव ।
प्रासादे तैलं नावशिष्टम् ।
अधुना किम् ?


तथास्तु पुच्छं दहन्तु ।


सैनिकैः वीथ्यां वीथ्यां हनुमान् पर्यभ्राम्यत ।
मूर्खाः एते । नगरस्य सर्व-स्थानानि मह्यं दर्शयन्ति ।


आकस्मिकमेव हनुमान् लघुः जातः । रज्जवः भूमौ पतिताः ।


हनुमान् गर्जन्नेव उल्लोचे समारूढः ।
रामः जयतु । सीता जयतु ।


एकोल्लोचात् अन्यमिति कुर्वमानः एव सः सर्वनगरम् अदहत् ।


ततः समुद्रजलेन तेन पुच्छाग्निः शान्तः कृतः । तेन आश्चर्यजनकी सफलता प्राप्ता ।


अपरे तीरे तस्य सहकारि-वानराः धैर्यपूर्वकतया प्रतीक्षन्ते स्म ।
हनुमान् आयाति।


वानराः हनुमन्तं स्कन्धे धृत्वा अनृत्यन् ।
हनुमान् चिरायुः भवतु।


अन्वेषकाः वीरवानराः प्रत्यागताः ।
एषः सुकुटमणिः सीतायाः एव
मम प्रिय-पत्न्याः


सुग्रीवेण सैनिकाः संगृहीताः ।


पंक्तिबद्धाः सैनिकाः प्राचलन् ।


विशालकाय-महर्क्ष सैनिकाः अपि।

एषा विशालसेना समुद्रतीरे प्राप्ता। अन्यतीरे च लंका, यत्र सीता बन्दी आसीत्।

कथं गम्यं समुद्रस्य परंपारे?
सेतुः कथम्?
वानरनलः महान् शिल्पी अस्ति। अयं बद्धुं शक्नोति।
किं सेतुं बद्धुं शक्यते अस्योपरि?







अस्योपरि कथं विश्वासः कर्तव्यः?

अत्र कः अपि अन्यथा हेतुः स्यात्।

मम विचारेण अस्योपरि विश्वासः भवितुमर्हति। अयं शरणं याचते। अतः अन्यथा हेतुः स्यादपि मया एषः नैराश्यं न नेयः।


शीघ्रमेव नलेन पाषाणैः
सेतुनिर्माणं समारब्धम्।


हस्तैः परहस्तैः पर्वततः महान्तः
पाषाणाः आनीताः।


सेतुः च सिद्धः अभवत्।


सेतौ सैन्यं प्राचलत्।
चलन्तु लंकाम्।
लंकाम् चलन्तु।

हनुमता रामः स्वस्कन्धे गृहीतः,
अंगदेन च लक्ष्मणः
धृतः ।

सागरं समुत्तीर्य रामसैनिकाः लंकां प्राप्ताः। लंकायाः
बहिः सागरतीरे सेनानिवेशः अभवत्।


केचित् राक्षसाः वानरवेषेण तत्रागताः।


उत्तरदिशि अस्माकं कति सैनिकाः?


परन्तु बिभीषणेन एते ज्ञाताः।
दक्षिण-दिशि अधिकारः कस्य हस्ते?
हनुमतः लक्ष्मणस्य च।


एते गुप्तचराः सन्ति। अपि हन्तव्याः?
नहि मुक्ताः कार्याः। एते रावणं वदन्ति तस्य शत्रुः कथम् अस्ति?
राजकुमारः रामः महान् उदारः।


युद्धारंभात् पूर्व गोपुरे
आरुह्य रावणेन शत्रु-
सेना: निरीक्षिता।


मध्ये इन्द्रेण दत्त:
रामरथ: तस्य
वामपार्श्वे
सुग्रीव:
च।
हं! एतान्
सर्वान् मृत्युं
नेष्यामि।


युद्धारंभ: अभवत्। वानरा:
शत्रुं पाषाणै: प्रहरन्ति।


राक्षससेनापति: जंबुमाली हनुमता
सह युद्धार्थम् आगत:। हनुमता
तस्य रथ: चूर्णित:।


हनुमता
रामलक्ष्मणौ
स्वस्कन्धे आरो-
पितौ। उच्च-
स्थानत: उभय-
बन्धुभ्यां
निश्चितं लक्ष्यं
साधितं
बाणै:।













अकंपनस्य मृत्युना रावणः आहतः। तस्य बहवः सेनापतयः उद्विग्नाः। तस्य शोकेः क्रोधान्वितः अभवत्।

एते विनष्टाः कर्तव्याः एव।

पितः चिन्ता नैव कर्तव्या। अहम् एकैकं यमलोकं प्रेषयामि। ते मां द्रष्टुं न शक्नुवन्ति।



अस्तं गते सूर्ये युद्धविरामः जातः। ततः सर्वे जनाः दुःखविह्वलमनसा धाराशायिनः लक्ष्मणस्य समीपे आगताः।







उपचारार्थ संजीवनी अपेक्ष्यते।


संजीवनी बहुदूरे गंधमानपर्वते वसति। तस्याः मूलेन लक्ष्मणः पुनर्जीवितः भवेत्। ततः त्वरितं हनुमान् संजीवनीम् आनेतुं प्रस्थितः।


शतशः वनस्पतयः गन्धमाने। हनुमान् संजीवनीं ज्ञातुम् असमर्थः। समयः तु अत्यल्पः।
का संजीवनी?


समयः व्यतीतः न कर्तव्यः। अतः हनुमता स्वाकृतिः बृहती कृता। गन्धमानपर्वतः उद्धृतः लंकां च आनीतः।


लक्ष्मणः पुनर्जीवितः जातः। सहस्रशः वानराः अपि पुनर्जीविताः जाताः इव।


सूर्योदयानन्तरं पुनः युद्धारंभः। रावणः सुवर्णरथे आरुह्य रणांगणे आगतः। तस्य मुकुटं सूर्यप्रभायां दीप्यति स्म।


रावणस्य संमुखे कः अपि न संस्थितः। तदा रामः हनुमतः स्कंधे आरुह्य राक्षसराजरावणस्य संमुखे आगतः।


रामस्य बाणेन रावणस्य रथः भग्नः। समीपं मृत्युः आगतः इति दृष्ट्वा।
प्रतिनिवर्तस्व रथहीनशत्रुणा सह न युध्ये।


रावणः स्वसुहृत्समित्यां मन्त्रणां करोति।
अधुना सेनानेतृत्वं कस्मै देयम्?


कुंभकर्णः जागरितः कार्यः।


कुंभकर्णः अखण्डतया षण्मासपर्यन्तं स्वपिति स्म।
उत्तिष्ठ। उत्तिष्ठ।


महाकष्टेन कुंभकर्णस्य निद्राभंगः जातः।
का वार्ता?
भवता युद्धार्थं गन्तव्यम्।


कुंभकर्णः रणक्षेत्रे समागतः झंझावातः इव। तस्य पदतले वानराः चूर्णिताः भूताः मृताः च।


परन्तु रामबाणेन तस्य मस्तकं कर्तितम्।
रावणस्य सर्वे योद्धासेनापतयः हताः।
इन्द्रजित् यज्ञे व्यग्रः आसीत्।


समाप्ते यज्ञे इन्द्रजित् अजेयः भविष्यति। परंतु यज्ञः समाप्तः नाभवत्।


इन्द्रजित् अपि मृतः इति वार्ता रावणेन श्रुता।
अहम् एकलः! परंतु मत्सदृशः शक्तिशाली योद्धा नास्ति।


युद्धस्य अन्तिमचरणः आगतः।
रावणः लंकायाः सिंहद्वारे आगतः। बहिः
वानरसेना स्थिता आसीत्।


रावणस्य रथः विद्युदिव वानरसेनां
पटन् अग्रे गतः।


रावणः महाबली।
तुमुलं युद्धं समारब्धम्।


अंते रामरावणयोः युद्धं
समारब्धम्। रामेण
युद्धस्य अंतिमः
बाणः मुक्तः।


शत्रुकर्म समाप्तम्।
पापस्य पराजयः,
पुण्यस्य च विजयः।







ततः वानरसेना यथा आगता आसीत् तथा समुद्र-सेतुमार्गेण निर्गता ।







सर्वे नागरिकाः राजकुमारस्वागतार्थं समागताः। सर्वत्र परमानंदलहर्यः प्रसृताः।

महाराजः रामः चिरं जीवतु।

कुमार लक्ष्मणः चिरं जीवतु।

महाराज्ञी सीता चिरं जीवतु।

निर्गमानुज्ञासमयः जातः।

प्रियसुहृदः? अधुना गन्तव्यं पुनरागमनाय।

यदा कदापि आवश्यकता-नुसारेण निःशंक-तया सेवासूचना देया।

परंतु हनुमान् न निर्गतः।

अपि त्वं नैव गच्छसि हनुमन्?

अहमत्रैव स्थित्वा सदैव भवतां सेवां करोमि।